नवमो गुरुरुपचित्रा। एषा मात्रासमकादीनां पादैर्बद्धं पादाकुलकम्। तच्च द्विकात्रिकचतुष्कसंयोगभेदात्पञ्चषष्टिविधं यदाह—

द्विजातिजा विकल्पाः स्युस्त्रिंशत्त्रिशत्त्रिजातिजाः।
चतुर्जातिभवाः पञ्च पञ्चषष्टिरितीरिताः ॥ ५९ ॥

ग्रन्थगौरवभयान्न विवृता. ॥ २० ॥

उदा०—जे जम्महु असुणियपिम्मरसा। जे मूलहु अकलियविरहदसा ॥
पहरिसविसायविमुक्कचित्ता। धन्न ति मुणिवर विमलचरित्ता ॥ २० १ ॥ चित्ता।

[ ये जन्मनोऽज्ञातप्रेमरसा । ये मूलादकलितविरहदशा ॥
प्रहर्षविषादविमुक्तचित्ता । धन्यास्ते मुनिवरा विमलचरित्रा. ॥ २०.१ ॥ ]

स्पष्टा ॥ २०.१ ॥

उदा०—पई पियठाणाउ भंसियाओ। देव नियक्किवाणवासियाओ ॥
तग्गयसलिलंसुपहि अणिसं। रिउनिवसिरीउ रुयंतिव भिसं ॥ २०.२ ॥

[ त्वया प्रियस्थानाद्भ्रंशिता देव निजकृपाणवासिता ॥
तद्गतसलिलाश्रुभिर्नित्यं रिपुनृपश्रियो रुदन्तीव भृशम् ॥ २०.२ ॥ ]

'पइ'त्ति त्वया प्रियस्थानात्सहवासाद्भ्रंशिता देव स्वखड्गे पराश्रये वासिताः। असिगतजलाश्रुभिर्नित्यं रिपुनृपश्रियो रुदन्तीव भृशम् ॥ २०.२ ॥

उदा०—उय चित्तालिहियावि हु वाला। संमोहइ पीयाविव हाला ॥
पच्चक्खं पुण दिट्ठा किर सा। हालाहलमिव मारइ सहसा ॥ २०.३ ॥ उवचित्ता।

[ पश्य चित्रालिखितापि खलु बाला । संमोहयति पीतेव हाला ॥
प्रत्यक्षं पुनर्दृष्टा किल सा । हालाहलमिव मारयति सहसा ॥ २०.३ ॥ ]

स्पष्टा ॥ २० ३ ॥

उदा०—चंदुज्जोओ चंदणलेवो। कुवलयसिज्जा कमलुक्खेवो ॥
दाहिणमारुयउ य कप्पूरं। अहियं विरहे डहइ सरीरं ॥ २०.४ ॥

पायाकुलयं कस्सवि।

[ चन्द्रोद्योतश्चन्दनलेप । कुवलयशय्या कमलोत्क्षेप ॥
दक्षिणमारुतश्च कर्पूर । अधिकं विरहे दहति शरीरम् ॥ २० ४ ॥]

कमलोत्क्षेपः पद्मदलोपवीजनम्। कर्पूरं वीर्ये शीतलम्। यदाह—

कटुतिक्तोष्णमगुरु स्निग्धं वातकफापहम्।
तिक्तं सुरभि शीतं च कर्पूरं लघु लेखनमिति ॥ ६० ॥ ॥ २०.४ ॥

चउ चा टगणो मुत्तावलिया पो टदुगका पुणो वयणं ॥
तं चउसु अंतजमियं मडिला पाएसु दुसु दुसु अ अडिला ॥ २१ ॥

[चत्वारः चाः टगणो मुक्तावलिका; पटद्विकका. पुनर्वदनम्।
तच्चतुर्ष्वन्तयमित मडिला पादयोर्द्वयोर्द्वयोश्चाडिला ॥ २१ ॥]

चत्वारस्त्रिमात्रा एकश्चतुर्मात्रो मुक्तावलिका। एकः षण्मात्रो द्वौ चतुर्मात्रावेको द्विमात्रः पुनर्वदनम्। तदेव चतुर्ष्वपि पादेष्वन्ते यमकित मडिला। द्वयोर्द्वयोः पादयोः पुनराडिला ॥ २१ ॥

उदा०—न सुयइ न हसइ न हु सा जंपइ। सुहय तरुणि तुह विरहे संपइ।
केलिण्हाणभोयणविहिविसए। केवलमुत्ता वलियं ससए ॥२१·१॥ मुत्तावलिया।

[न स्वपिति न हसति न खलु सा जल्पति। सुभग तरुणी तव विरहे सम्प्रति।
केलिस्नानभोजनविधिविषये। केवलमुक्ता वलित श्वसिति ॥ २१ १ ॥]

केवलमुक्ता सती वलिय अत्यर्थं श्वसिति ॥ २१·१ ॥

उदा०—जउ तुह तिहुयणनाह निहालिउ। तउ मइं हेलह(इ) दुहु अवहेलिउ।
जउ तुह पवयणु पाविउ सामिय। तउ मह पूरिय सयलवि कामिय ॥ २१ २ ॥
वयण।

[यदा त्व त्रिभुवननाथ निभालित। तदा मया हेलया दु खमवहेलितम्।
यदा तव प्रवचन प्राप्त स्वामिन्। तदा मम पूरित सकलमपि कामितम् ॥ २१·२ ॥]

उदा०—चिरमडिलहं भवरन्नि असत्थ[हं]। जे आसासय धम्मियसत्थहं।
पणमह मुणियजिणागमसत्थहं। ताहँ गुरुहँ तिहुयणवि पसत्थहं ॥ २१·३ ॥
[मडिला।]

[चिरमटनशीलाना भवारण्येऽस्वस्थाना। ये आश्वासका धार्मिकसार्थानाम् ॥
प्रणमत ज्ञातजिनागमशास्त्रेभ्य। तेभ्यो गुरुभ्यस्त्रिभुवनेपि प्रशस्तेभ्य ॥ २१ ३ ॥]

चिरमटनशीलाना भवारण्ये अश्व(स्व)स्थाना ये आश्वासका धार्मिकसार्थाना प्रणमत ज्ञातजिनागमशास्त्रेभ्यस्तेभ्यो गुरुभ्यस्त्रिभुवनेपि प्रशस्तेभ्यः। 'अडिलह'त्ति अटितु शीलमेषामिति। 'तच्छीलाद्यर्थस्येर' (हे० ८ २ १४५) इति अडिर इति सिद्धे 'रस्य लो वा' (हे० ८ २ २२६) इति लत्वम् ॥ २१ ३ ॥

उदा०—निअडि लयहं परिअडहिं सिलीमुह। मयणि निसिय ससिसिलह सिलीमुह ॥
तुह विरहानलि सुसियवसंतह। पहिय पवेसुवि विसमु वसंतह ॥ २१·४ ॥
अडिला।

[निकटे लताना पर्यटन्ति शिलीमुखा। मदनेन निशाता शशिशिलाया शिलीमुखा ॥
तव विरहानले शुष्कवसान्त्रस्य। पथिक प्रवेशोपि विषमो वसन्तस्य ॥ २४ ४ ॥]

निकटे लताना कुसुमसौरभात्पर्यटन्ति भ्रमराः। मदनेन निशाताः शशिशिलाया शराः। तव विरहानलशुष्कवसान्त्रस्य हे पथिक प्रवेशोपि विषमो वसन्तस्य दूरे प्रकर्ष. ॥ २१ ४ ॥

पद्धडिया टचउक्कं चरमे टे मज्झका, न विसमे जो।
टदुगं तगणो खण्डं, चउ ता मयणावयारुत्ति ॥ २२ ॥

[ पद्धटिका टचतुष्कं चरमे टे मध्यकौ, न विषमे ज ।
टदुग तगण खण्डं, चत्वारस्ता मदनावतार इति ॥ २२ ॥]

चतुर्मात्रचतुष्कं पद्धटिका । तत्रान्त्ये चतुर्मात्रे मध्यकावेव । न च विषमे जगणः । तथा द्वौ चतुर्मात्रावेक. पञ्चमात्र. खण्डम् । तथा चत्वार. पञ्चमात्रा मदनावतार' । इति शब्द. प्रकारार्थः एतत्प्रकाराणि छन्दासि सूचयति । एकः षण्मात्रश्चत्वारः समा मध्यकाश्चतुर्मात्रा हेला । अजाः समाः पञ्च चतुर्मात्राः एकः पञ्चमात्रोऽधिकाक्षरा । द्वौ त्रिमात्रौ त्रयश्चतुर्मात्रा एकस्त्रिमात्रो मञ्जिरी । षट्पञ्चचतुस्त्रिद्विमात्रा अरविन्दमिति पद्धटिकाप्रकाराणि । एकः षण्मात्र एकश्चतुर्मात्र एकस्त्रिमात्र उपखण्डम् । एकः षण्मात्रो द्वौ चतुर्मात्रौ खण्डितेति खण्डप्रकाराणि । एतत् त्रयमवलम्बकाख्य ज्ञेयम् । पञ्चषट्सप्ताष्टनवपञ्चमात्राणि क्रमात् मधुकरी–नवकोकिला–कामलीला–सुतारा–वसन्तोत्सवाख्यानि मदनावतारप्रकाराणि ॥ २२ ॥

**उदा०—धन्नह उद्दामपणामरंगि । भालत्थलि पडिसंकंत चंगि ।**
**गुरुसमुद्दसूरि पयनक्खु कंति । कप्पद्धडिआइ[1] तुलं वहंति ॥ २२·१ ॥** पद्धडिया ।

[ धन्यानामुद्दामप्रणामरङ्गे । भालस्थले प्रतिसक्रान्ता सुन्दरी ।
गुरो समुद्रसूरे पदनखकान्ति । कल्पवृक्षस्य तुला वहति ॥ २२·१ ॥ ]

'नक्खु'त्ति द्वितीयतुर्ययोरुपरि पूर्व. (हे० ८·२ ९०) इति द्वितीयोपरि प्रथमः ॥ २२ १ ॥

**उदा०—वेरि य केसरिसरहओ । साहिय ठ खंड भरहओ ।**
**कयसंजमो महारहो । सुव्वइ चक्कीवि भरहो ॥ २२·२ ॥** खड ।

[ वैरिणौ केसरिशरभौ । कथितो हि खण्डो भरत ।
कृतसंयमो महारथ । श्रूयते चक्र्यपि भरत ॥ २२ २ ॥ ]

स्पष्टम् ॥ २२ २ ॥

**उदा०—रोसगुरुगिरिसविसमच्छिमुच्छंतए**
**पलयजलणंमि गयणंमि गच्छंतए ।**
**तंमि तम्मंतरइवयणनलिणे खणे**
**को खमो हुज्ज मयणावयारक्खणे ॥ २२·३ ॥** [मयणावयारो ।]

[ रोषगुरुगिरिशविषमाक्षिणि मूर्च्छति प्रलयज्वलने गगन गच्छति ।
तस्मिस्ताम्यद्रतिवदननलिने क्षणे क क्षमो भवेन्मदनापदारक्षणे ॥ २२ ३ ॥ ]

ताम्यद्रतिवदननलिने क्षणे कः क्षमो भवेन्मदनापदारक्षणे अपि तु न कोपि । हेलाधिकाक्षरादीनि स्वयमुदाहार्याणि ॥ २२·३ ॥

---

१ Is it कप्पज्झडिआइ ? झडिआ (cf Marathi झाड) is rendered by me as वृक्ष But this would mean that the name of the metre is पज्झटिका and not पद्धटिका as the ms reads Jain prosodists give the name as पद्धतिका The Prakrita Paingala, however, gives it as पज्झटिका See Bibliotheca Indica edition, p 217

तदुगं टदुगं चगणो गलिययसह चदुगटतिगचगणगुरू ।
खंजयमह टगणपंचगलहुगुरू रासयं होई ॥ २३ ॥

[तद्विकं टद्विक चगणो गलितकमथ चद्विकटत्रिकचगणगुरव ।
खञ्जकमथ टगणपञ्चकलघुगुरवो रासक भवति ॥ २३ ॥]

इह हि गाथादण्डकादिवर्जं सर्वच्छन्दांसि यमकिताहीणि सामान्येन गलितकानि। सर्वगलितकानि सानुप्रासाणि यमकिताहीणि सामान्येन खञ्जकानि। सर्वखञ्जकानि एकेन द्वाभ्या त्रिभिर्वा छन्दोभिर्दीर्घीकृतानि सामान्येन शीर्षकाणि। सर्वा अपि जातयः सामान्येन रासकम्। यदाह—

सव्वाउ वि जाईओ पत्थाववसेण इत्थ वज्झति ।
रासावधो नूण रसायण बुद्धगुट्ठीसु ॥ ६१ ॥

विशेषात्तु द्वौ पञ्चमात्रौ द्वौ चतुर्मात्रावेकस्त्रिमात्रो गलितकम्। यमकिताहित्वाम्नानाद्भूरिभेद चेदम्। अथ द्वौ त्रिमात्रौ त्रयश्चतुर्मात्रा एकस्त्रिमात्रो गुरुरिति खञ्जकम्। इदमपि बहुविधम्। अथ पञ्च चतुर्मात्रा लघुर्गुरुश्च रासकम्। एतदप्यनेकधा। शीर्षकाणि त्वग्रे द्विभङ्गीत्रिभङ्गीभ्या वक्ष्यति ॥ २३ ॥

उदा०—घणपयट्ट पियसंकह मुहि सासिहि सहिय
गंडफलगि सहुं पाणिहं धवलिम आरुहिय ।
गलिय अंसुजलि सहुं नयणह विब्भम ललिय
तुहुं पियसहि विरहानलि बहुविह लंघलिय ॥ २३·१ ॥ गलियय ।

[घनप्रवृत्ता प्रियसकथा मुखे श्वासै सह
गण्डफलके सह पाणिना धवलिमा आरूढ ।
गलित अश्रुजलेन सह नयनयोर्विभ्रमो ललित
त्वं प्रियसखि विरहानलेन बहुविध त्रासिता ॥ २३·१ ]

स्पष्टम् ॥ २३ १ ॥

उदा०—उग्गसेणतणयाइ मिलायंतवयणाए
पवलवहलवाहपवाहझरंतनयणाए ।
चइवि जंतु उज्जंति रूवजियनलकूवरो
सच्चविओ सविलक्खं जयइ जिणवरो ॥ २३ २ ॥ खजय ।

[उग्रसेनतनयया म्लायमानवदनया
प्रवलवहलवाष्पप्रवाहक्षरन्नयनया ।
त्यक्त्वा गच्छन्नुज्जयन्तं रूपजितनलकूवर
प्रत्यक्षीकृत सविलक्ष जयति नेमिजिनवर ॥ २३ २ ॥]

'सचविउ'त्ति दृष्टः ॥ २३ २ ॥

उदा०—पणयजणकप्परुक्खसरिसं पयतामरसं
जाण नमंति सुरा सययं कयमणुक्करिसं ।
केवलणाणपईवपयासियसयलविसया ।
ते जिणणाहा तुम्हं कुणंतु भद्दं सया ॥ २३·२ ॥

[ प्रणतजनकल्पवृक्षसदृशं पदतामरसं
येषां नमन्ति सुराः सततं कृतमनउत्कर्षम् ।
केवलज्ञानप्रदीपप्रकाशितसकलविषया—
स्ते जिननाथा युष्माकं कुर्वन्तु भद्रं सदा ॥ २३ ३ ] ॥ २३ ॥

सा चंदलेहिया पो टचउक्कं को य जत्थ; अह दुवई ।
पो पंच टा गुरू तत्थ मज्झका पढमपंचमटा ॥ २४ ॥

[ सा चन्द्रलेखा पः टचतुष्कं कश्च यत्र; अथ द्विपदी ।
प. पञ्चटा. गुरुस्तत्र मध्यकौ प्रथमपञ्चमटौ ॥ २४ ॥ ]

यत्रैकः षण्मात्रश्चत्वारश्चतुर्मात्रा एको द्विमात्रश्च सा चन्द्रलेखिका । अथ सा द्विपदी यत्रैकः षण्मात्रः पञ्च चतुर्मात्रा एको गुरु । 'तत्थ'त्ति तेषु पञ्चसु चतुर्मात्रेषु मध्यकौ प्रथमपञ्चमौ ॥ २४ ॥

उदा०—बहलंधारपडलमयमयमयपंकचच्चिए
नहदेवंमि पउरतरतारयकुसुमअच्चिए ।
जामिणिधम्मिणीइ ओ अकदुरेहदुरेहिया
केयइदोणियव्व आरोविय चंदलेहिया ॥ २४·१ ॥ [चंदलेहिया] ।

[ बहलान्धारपटलमृगमदमयपङ्कचर्चिते
नभोदेवे प्रचुरतरतारकाकुसुमार्चिते ।
यामिनीधर्मिण्या ओ अङ्कद्विरेफराजिता
केतकिद्रोणिकेवारोपिता चन्द्रलेखिका ॥ २४·१ ॥ ]

ओ इत्यव्ययं सूचनायाम् । यदाह—ओ सूचनापश्चात्तापे (हे० ८·२·२०३) । केतकीद्रोणिकेति केतकीदलं हि द्रोणाकृति स्यात् ॥ २४ १ ॥

उदा०—घोरअणोरपारअंधारयपंकुच्छंगबुड्डयं
कड्ढिवि कठिणअंककिणकलिओ हढिण विलोयगड्डयं ।
चंदुवइल्लु जेम्व ओ सद्दलि नहकच्छंमि निब्भरं
तारयनियरकिरणउक्केरतिणंकुर चरइ अइचिरं ॥ २४·२ ॥ दुवई ।

[ घोरानाद्यनन्तान्धारपङ्कोत्सङ्गनिमग्नं
कृष्ट्वा कठिणाङ्ककिणकलितो हठेन विलोकरथम् ।
चन्द्रवृषभो ननु शाद्वले नभ कच्छे निर्भरं
तारकानिकरकिरणोत्करतृणाङ्कुराश्चरत्यतिचिरम् ॥ २४ २ ॥

'उक्केर'त्ति उत्करः। 'वल्युत्करपर्यन्ताश्चर्ये वा' (हे० ८ १ ५८)। तथा द्विपद्येव गुरुणैकेनाधिका आरनालम्। उपान्त्यलघुना पुनरूना कामलेखा। ते अप्येवमुदाहार्ये ॥ २४·२ ॥

**रासावलयं पो अजटगणो पो तो य, वत्थुवयणे तु।**
**पगणो अजटो मज्झकटगणो अजटो य पगणो य ॥ २५ ॥**

[रासावलय पः अजटगण. पः तश्च; वस्तुवदने तु।
पगणो अजटो मज्झकटगणो अजटश्च पगणश्च ॥ २५ ॥]

एकः षण्मात्र एको जगणरहितश्चतुर्मात्रः एकः षण्मात्र एकः पञ्चमात्रश्च रासावलयम्। वस्तुवदने त्वेकः षण्मात्र एको जगणरहितश्चतुर्मात्र एको मध्यकश्चतुर्मात्र एको जगणरहितश्चतुर्मात्र एकः षण्मात्रश्च। वस्तुकमित्यन्ये। लघुषोडशकाद् द्विद्विलघुवृद्ध्या चेदमेकचत्वारिंशद्विधम्। यदाह—

वंसो वित्तो नालो वाहो वामो वलाहओ विंदो।
विद्धो विसो विसालो विसारओ वासरो वेसो ॥ ६२ ॥

तुंगो ग्गिो भिंगो भिंगारो भीसणो भवो भालो।
भद्दो भग्गो भट्टो भीरू तत्तो भडो भसलो ॥ ६३ ॥

अलओ वलओ मलओ मजीरो मयमयो मओ माणी।
महणो मसिणो मडलो महो मुहो मद्दवो मुहलो ॥ ६४ ॥

एए नामनिबद्धा चउवीसकला हवंति वत्थुवया।
सोलहलहुआउ लहूहिं वड्ढमाणेहिं दोदोहिं ॥ ६५ ॥

[एते नामनिबद्धा चतुर्विंशतिकला भवन्ति वस्तुवदना।
षोडशलघुकाल्लघुभ्यां वर्धमानाभ्यां द्वाभ्यां द्वाभ्याम् ॥ ६५ ॥]

रासावलयपूर्वार्धं वस्तुवदनकोत्तरार्धं यद्वा वस्तुवदनपूर्वार्धं रासावलयोत्तरार्धमिति द्विधापि संकीर्णाख्यं छन्दः ॥ २५ ॥

**उदा०— ढक्कपडहपडुपडिरवमुहरासावलउ**
**बहुवलवहलियहलवोलाउलसुरनिलउ।**
**तुह आगमणु नियवि निव भयभिंभलनयणु**
**निय वि नियंबिणि चइवि पलाइउ वेरियणु ॥ २५ १ ॥ [रासावलओ]।**

[ढक्कापटहपटुप्रतिरवमुखराशावलय
बहुवलवहलितकलकलाकुलसुरनिलयम्।
तवागमन दृष्ट्वा नृप भयविह्वललोचन
निजामपि नितम्बिनीं त्यक्त्वा पलायितो वैरिजन ॥ २५ १ ॥]

'मुहरासावलउ'त्ति मुखरितदिक्चक्रम्। 'हलबोल'त्ति कलकलः। 'नियवि'त्ति दृष्ट्वा। 'नियवि'त्ति निजा अपि ॥ २५·१ ॥

उदा०—कय वयंसि दुहुदाहु देहि जक्कंगुच्चोडणु
उण्हु सासु मुहि महुरअहररसअमयविलूडणु ।
असुसित्थु थणवत्थु वयणु विच्छाउ निहालह
दुल्लहवल्लहविप्पलंभु किम्व वहलिउ वालह ॥ २५·२ ॥ वत्थुवयणं ।

[ कृता वयस्ये दु खदाहा देहे चन्दनचर्चा
उष्ण श्वासो मुखे मधुराधररसामृतविलोटन ।
अश्रुसिक्त स्तनवस्त्र वदन विच्छाय निभालयन
दुर्लभवल्लभविप्रलम्भ किमिव वहलीकृतो बालाया ॥ २५·२ ॥ ]

'चक्कगि'त्ति चन्दनम् ॥ २५२ ॥

रसटा उच्छाहो तइयपंचमा मज्झका अजा सेसा ।
इह चउपईसु पायं विसमसमपयाण अणुपासो ॥ २६ ॥

[ रसटा उत्साहस्तृतीयपञ्चमौ मध्यकौ अजा शेषा ।
इह चतुष्पदीषु प्रायो विषमसमपादयोरनुप्रासः ॥ २६ ॥ ]

पट् चतुर्मात्रा उत्साहः । अत्रापवादः । तृतीयपञ्चमौ मध्यकौ । जगणरहिताः शेषा. । इहैतासु गाथावर्जं चतुष्पदीषु विषमसमयो. पादयोरनुप्रासः । प्रायोग्रहणात्पञ्चाननललितादौ समपादयोरिति ॥ २६ ॥

उदा०—नो वीरह मंडलग्गि लग्गइ न वसइ सायरि
नो खिल्लइ महुमहउरि न य वियरइ कमलायरि ।
वेसायणसिहिणि नवि लसइ करिदसणि न पसरइ
लच्छि थिरत्तणु पुरिसह उच्छाहि परि जइ करइ ॥ २६·१ ॥ उच्छाहो ।

[ न वीराणा मण्डलाग्रे लगति न वसति सागरे
न खेलति मधुमथनोरसि न च विचरति कमलाकरे ।
वेश्याजनस्तने नापि लसति करिदशने न प्रसरति
लक्ष्मी. स्थिरत्वं पुरुषस्योत्साहे तु जगति करोति ॥ २६ १ ॥ ]

स्पष्टः ॥ २६ १ ॥ (इति) चतुष्पदीप्रकरणम् ॥

अथ पञ्चपदी ।

तगणदुगटगणलहुणो पढमतइयपंचमेसु चरणेसु ।
टा णवरि तइयपंचमपाएसुं मज्झकच्चेय ॥ २७ ॥

दुइयतुरिएसु टदुगं चो य इमा तिपयरइयपुव्वद्धा ।
तइयप्पंचमपयअणुपासा मत्ता पउरभेया ॥ २८ ॥

[ तगणद्विकटगणलघव प्रथमतृतीयपञ्चमेषु चरणेषु ।
टौ केवलं तृतीयपञ्चमपादयोर्मध्यकावेव ॥ २७ ॥

द्वितीयतुर्ययोष्टद्विकं चश्चेय त्रिपादरचितपूर्वार्धा ।
तृतीयपञ्चमपदानुप्रासा मात्रा प्रचुरभेदा ॥ २८ ॥ ]

प्रथमतृतीयपञ्चमेष्वंह्रिषु द्वौ पञ्चमात्रावेकश्चतुर्मात्र एको लघु, केवल तृतीयपञ्चमपादयोर्यौ चतुर्मात्रौ तौ मध्यकावेव । द्वितीयचतुर्थपादयोर्द्वौ चतुर्मात्रावेकस्त्रिमात्र एवं पञ्चपादा यस्यामिय पादत्रयकृतपूर्वार्धा अर्थात्पादद्वयकृतोत्तरार्धा तृतीयपञ्चमपादयोः सानुप्रासा प्रचुरभेदा मात्रा नाम पञ्चपदी ॥ २७ ॥ २८ ॥

**उदा०—महुमहूसवमुहि वित्तु मत्त । फुल्लंधुयभंगुरिहि । गुंदिभरिहि मायंद झंपिय ।**
**पियमाहवि मुणिमुणिवि । मुणिवि किंपि झाणाउ कंपिय ॥ २८·१ ॥ [मत्ता] ।**

[ मधुमधूत्सवमुखे वृत्तो मत्त- । भृङ्गभङ्गुरैः- । मंजरीभरैर्माकन्द आच्छादित ॥
प्रियमाधव्या मुणमुणाय्य । मुनय किमपि ध्यानात्कम्पिता ॥ २८·१ ॥ ]

'गुंदि'त्ति मञ्जरी । 'पियमाहवि'त्ति कोकिला ॥ 'पउरभेय'त्ति भणनान्मत्तवालिका १ मधुकरिका २ मत्तविलासिनी ३ मत्तकरिणी ४ बहुरूपेति ५ सञ्ज्ञा अस्या भेदा ज्ञेयाः । यदवोचच्छन्दःकन्दल्याम्—

मत्तञ्चिय उच्चइ मत्तवालिया दुइयतुरियचरणेसु ।
पढमटगणमि तगणे कयंमि जुगव अजुगव वा ॥ ६६ ॥

समचरणणिहणटगणे ते युज्य कमेण मत्तमहुअरिया ।
[इय] मत्तविलासिनिया सिहिसरपयमुहदुतेसु दुटा ॥ ६७ ॥

मत्तकरिणीवि एव सिहिसरपाएसु टंमि जइ तगणो ।
एयासिं मत्ताईण सकरो होइ बहुरूवा ॥ ६८ ॥

[ मात्रैवोच्यते मत्तवालिका द्वितीयतुरीयचरणयो ।
प्रथमटगणे तगणे कृते युगपदयुगपद्वा ॥ ६६ ॥

समचरणनिधनटगणे तौ योजयित्वा क्रमेण मत्तमधुकरिका ।
इति मत्तविलासिनी शिखिशरपदमुखद्वितयो द्विटौ ॥ ६७ ॥

मत्तकरिण्यप्येव शिखिशरपादयो टे यदि तगणो ।
एतासा मात्राणा सकरो भवति बहुरूपा ॥ ६८ ॥ ]

आसामुदाहरणानि ग्रन्थान्तराज्ज्ञेयानि । पञ्चपदीप्रकरणम् ॥ २८·१ ॥

अथ षट्पदी—

**दसअट्ठतेरसहिं वा इह बारसअट्ठतेरसहिं अहवा ।**
**अट्ठट्ठेगारसहिं व दसट्ठएकारसहिं वावि ॥ २९ ॥**

**बारसअट्ठेगारसहिं वा रविवसुरवि(वी)हिं य कलाहिं ।**
**तिसु तिसु पएसु कमसो दलजुयले बहुविहा घत्ता ॥ ३० ॥**

एसा कडवयनिहणे छड्डुणिया इत्थ पढमबिहुयाण ।
तयछट्ठआण [य] चउत्थपंचमाणं च अणुपासो ॥ ३१ ॥

[ दशाष्टत्रयोदशभिर्वा इह द्वादशाष्टत्रयोदशभिरथवा ।
अष्टाष्टैकादशभिर्वा दशाष्टैकादशभिर्वापि ॥ २९ ॥

द्वादशाष्टैकादशभिर्वा रविवसुरविभिर्वा कलाभिः ।
त्रिपु त्रिपु पादेपु क्रमशो दलयुगले बहुविधा घत्ता ॥ ३० ॥

एषा कडवकनिधने छड्डुणिकात्र प्रथमद्वितीययोः ।
तृतीयपष्ठयोश्च चतुर्थपञ्चमयोश्चानुप्रासः ॥ ३१ ॥ ]

'इह'त्ति अस्मिश्छन्दसि दशाष्टत्रयोदशादिकला यथासंख्य क्लृप्तत्रित्रिपादघटितार्धद्वया बहुविधा घत्ता नाम षट्पदी । वक्ष्यमाणस्य सर्वेर्मुखे कडवकस्य त्वन्ते ध्रुवमियं कार्यैत्र । ध्रुवा ध्रुवकमिति सज्ञाद्वयेपि एषा कडवकान्ते प्रक्रान्तार्थस्य भङ्ग्यन्तरेणाभिधाने छडणिकेति तुर्यनामापि । 'इत्थ'त्ति अस्या घत्ताया प्रथमद्वितीययोस्तृतीयपष्ठयोश्चतुर्यपञ्चमयोः पादयोरनुप्रासः ॥ २९–३१ ॥

उदा०—मणि माणसमुद्धय । वप्पुड मद्दय(मुद्धय) । जे जिणिंद तुह नहु णमिय ।
दुहसंघत्ताविय । कुसमय-भाविय । ते नर निरु भवि चिरु भमिय ॥ ३०·१ ॥
[घत्ता] ।

[ मनसि मानसमुद्धता । मूर्खा वराका. । ये जिनेन्द्र त्वा न प्रणता ॥
दु खसघतापिता । कुसमयभाविता । ते नरा खलु भवे चिरं भ्रान्ता ॥ ३०·१ ॥ ]

'सघत्ताविय'त्ति 'समासे वा' (हे ८ २·९७) इति द्वित्वम् । 'वप्पुडु'त्ति शीघ्रादित्वाद्वराकस्य वप्पुडः[1] । 'निरु'त्ति निश्चयार्थे अव्ययम् ॥ ३० १ ॥

उदा०—जय जिणसासणणंदन(ण) । वणहरियंदण । निम्मलजसचंदणमलय ।
गुरुकुलगयणदिवायर । गुणमणिसायर । तिलयसूरि गणहरतिलय ॥३०·२॥

महिभरसेसह । भीमनरेसह । जउ वज्जिय जयढक्क ।
तउ रिउवग्गह । भयभरभग्गह । हियडइ पडिय धसक्क ॥ ३०·३ ॥

भग्गउ अइयारिहिं । इक्कपहारिहिं । समरि सयंभरिराउ ।
घणरणकुड्डालह । कुमरप्पालह । तिणि मणि भइउ विसाउ ॥ ३०·४ ॥

[ जयजिनशासननन्दन– । वनहरिचन्दन । निर्मलयशश्चन्दनमलय ॥
गुरुकुलगगनदिवाकर । गुणमणिसागर । तिलकसूरे गणधरतिलक ॥ ३० २ ॥

महीभरशेषस्य । भीमनरेशस्य । यदा वाद्यते जयढक्का ॥
तदा रिपुवर्गस्य । भयभरभग्नस्य । हृदये पतिता भीति ॥ ३०·३ ॥

भग्नोतिचारिभि– । रेकप्रहारेण । समरे शाकम्भरीराज ।
घनरणकौतुकवत । कुमारपालस्य– । तेन मनसि भक्तो विषाद. (?) ॥ ३० ४ ॥ ]

---

१ The reference is to हे० ८. ४ ४२२, but the actual word वप्पुड occurs under ८ ४ ३८७.

'कुड्डालह'त्ति । शीघ्रादित्वात् । कौतुकस्य कुड्ड तत आलश्च ॥ ३०.४ ॥

उदा०—दलि महियलु रिङ्गंतह । तुह चलंतह । दीसहि जय जयवीर ।
कट्ठ अमित्तह चित्तिहिं । तिण पुण दंतिहिं । गेहिणिनयणिहिं नीर ॥ ३०.५ ॥*

[दलेन महीतलमलंकुर्वाणस्य । तव चलत. । दृश्यते जय जगद्वीर ॥
कष्टा अमित्राणा चित्ते । तृण पुनर्दन्ते । गृहिणीनयनेषु नीरम् ॥ ३०.५ ॥]

'कट्ठ'ति काष्ठानि कष्टानि च ॥ ३०.५ ॥

उदा०—दीसहि सुंड गयाणणि । कव्वइ कइयणि । जूयचडण सिरि निब्भरु ।
मारण जइपरिपा(वा)रइ । रज्जि तहारइ । कुमरनरिंद किवायर ॥ ३०.६ ॥*

[दृश्यते शुण्डा गजानने । काव्यानि कविजने । यूकापतन शिरसि निर्भरम् ॥
मारण यतिपरिवारे (?) । राज्ये तव । कुमारनरेन्द्र कृपाकर ॥ ३०.६ ॥]

'सुंड'त्ति मदिरा. करिकराश्च । 'कव्व'त्ति कव्यानि काव्यानि च । यूतपतनानि यूकापतनानि च । दिङ्मात्रमिद घत्ताषट्कम् । एवं सप्तकलाद्यैः सप्तदशकलान्तैः पादैस्तुल्यैरतुल्यैस्तुल्यातुल्यैर्वा त्रिभिस्त्रिभिर्वर्द्धार्धद्वयानेकधा विदग्धगोष्ठीगरिष्ठा घत्ता । किंच तृतीयषष्ठपादयोर्दशादयो मात्रा एकैकवृद्धया यावत्सप्तदश, शेषाङ्घ्रिचतुष्के तु सप्तैव यत्र सा षट्पदजातिर्नाम षट्पदी । दशादीना सप्तदशान्तानामष्टविधत्वादष्टधा । सप्तस्थाने अष्टमात्राश्चेत्तदा सैवोपजातिर्नाम षट्पदी पूर्ववदष्टधा । अष्टस्थाने नव चेत् तदावजातिर्नाम षट्पदी प्राग्वदष्टधा । एव षट्पदजात्युपजात्यवजातीना प्रत्येकमष्टविधत्वाच्चतुर्विंशतिधा षट्पदी । यदवोचच्छन्दःकन्दल्याम्—

जीइ कलाउ दसाई सत्तरसता य सिहिरसपएसु ।
सेसेसु सत्त छपई सा छपई नाम अट्ठविहा ॥ ७१ ॥

इय अट्ठहि उवजाई सत्तट्ठाणे कलाहि अट्ठविहा ।
नवहि पुणो अवजाई एव चउवीसहा छपई ॥ ७२ ॥

[यस्या कला दशादय सप्तदशान्ताश्च शिखिरसपदयो ।
शेषेषु सप्त षट्पदी सा षट्पदी नामाष्टविधा ॥ ७१ ॥

इति अष्टभिरुपजाति. सप्तस्थाने कलाभिरष्टविधा ।
नवभि पुनरवजाति एव चतुर्विंशतिविधा षट्पदी ॥ ७२ ॥]

चतुष्पदीद्विपद्यावपि ध्रुवाध्रुवकघत्तासञ्ज्ञे ज्ञेये । ते अपि सधिमुखे कडवकान्ते ध्रुव कार्ये । केवल कडवकान्ते चतुष्पद्येव छडणिकाख्या न द्विपदी । यच्छन्दःकन्दली—

कडवयनिवहो सधी पद्धडियाईहिं चउहि पुण कडवं ।
सधिमुहे कडवते धुवा च धुवय च घत्ता वा ॥ ७३ ॥

सा तिविहा छपई चउपई य दुपई य तासु पुण दुन्नि ।
छच्चउप्पईओ कडवयनिहणे छड्डुणियनामावि ॥ ७४ ॥

---

* Both 30 5 and 30 6 are fine examples of श्लिष्टपरिसंख्या

[ कडवकनिवह सधि' पद्धतिकादिभिश्चतुर्भि' पुन. कडवम् ।
सधिमुखे कडवान्ते ध्रुवा च ध्रुवक च घत्ता वा ॥ ७३ ॥

सा त्रिविधा षट्पदी चतुष्पदी च द्विपदी च तासु पुनर्द्वे ।
षट्चतुष्पद्यौ कडवकनिधने छड्डणिकानाम्न्यावपि ॥ ७४ ॥ ]

तथान्तरसमार्धसमा सकीर्णा सर्वसमा चेति चतुर्धा चतु पदी । यच्छन्दःकन्दली—

अह चउपईओ चउहा हवति अन्तरसमा तहद्धसमा ।
सकिन्ना सव्वसमा य तासु तावतरसमाओ ॥ ७५ ॥

विसमे सेगा सेगा सत्ताई सोल जाव पत्तेय ।
अट्ठाई जा सतरस सेगा सेगा समे मत्ता ॥ ७६ ॥

चंपयकुसुमाइणामियाओ जाईओ हुति पणवन्ना ।
दिसिगहवसुहयरससरसायरसिहिणयणचद्भेएहिं ॥ ७७ ॥

एआओच्चिय सुमणोरमाइनामाओ वच्चए मुणह ।
एवं दहुत्तरसय चउप्पई अंतरसमाओ ॥ ७८ ॥

अतरसमयच्चिय दुइयतइयपायाण विणिमयंमि कए ।
अद्धसमा य दहुत्तरसयसखा तेहिं णामेहिं ॥ ७९ ॥

दुहि तिहि चउहिवि विसरिसपाएहि विमिस्सियाओ सकिन्ना ।
सव्वसमाओ पुण सरीसएहि सव्वेहिं पाएहिं ॥ ८० ॥

[ अथ चतुष्पद्यश्चतुर्धा भवन्ति अन्तरसमा तथार्धसमा ।
सकीर्णा सर्वसमाश्च, तासु तावदन्तरसमा ॥ ७५ ॥

विषमे सैका सैका सप्तादय षोडश यावत्प्रत्येकम् ।
अष्टादयो यावत्सप्तदश सैका सैका समे मात्रा ॥ ७६ ॥

चम्पककुसुमादिनाम्न्यो जातयो भवन्ति पञ्चपञ्चाशत् ।
दिग्ग्रहवसुहयरसशरसागरशिखिनयनचन्द्रभेदै ॥ ७७ ॥

एता एव सुमनोरमादिनाम्नी. व्यत्यये जानीत ।
एव दशोत्तरशत चतुष्पद्य अन्तरसमा ॥ ७८ ॥

अर्धसमानामेव द्वितीयतृतीयपादयो विनिमये कृते ।
अर्धसमाश्च दशोत्तरशतसख्या ते [एव] नामभि ॥ ७९ ॥

द्वाभ्यां त्रिभिश्चतुर्भिरपि विसदृशपादै विमिश्रिता सकीर्णा ।
सर्वसमा पुन सदृशै सर्वै पादै ॥ ८० ॥ ]

कुङ्कुमाद्यास्तु चतुःषष्टिधा द्विपदी । तयो पञ्चाननललितामलयमारुतकदोहकापदोहकाद्या कतिचिदन्तरसमाचतुष्पदीभेदा कुङ्कुमाद्याश्च कतिचिद्द्विपदीभेदा. पञ्चाननललिता च बहुश. सधिमुखेषु प्रयुक्ता दृश्यते ॥ २९ ॥ ३० ॥ ३१ ॥

**पपका टदुगं पपटा कमेण मुहणिहणदलपयतिगेसु ।**
**कित्तिधवलं दलजुगे पढमतइज्जाण अणुपासो ॥ ३२ ॥**

[पपकाष्टदुग पपटाः क्रमेण मुखनिधनदलपदत्रिकेषु ।
कीर्तिधवल दलयुगे प्रथमतृतीययोरनुप्रासः ॥ ३२ ॥]

धवलव्याजाद्येन च्छन्दसा पुमान् वर्ण्यते तद्धवलम् । तच्च त्रिधा । अष्टपात् षट्पाच्चतुष्पात् । यदाह—

धवलमिहेण सुपुरिसा वन्निज्जइ जेण तेण सो धवलो ।
धवलोवि होइ तिविहो अट्ठपउ च्छप्पउ च्चउप्पाओ ॥ ८१ ॥

[धवलमिषेण सुपुरुषो वर्ण्यते येन तेन स धवल ।
धवलोऽपि भवति त्रिविध' अष्टपाद् षट्पाद् चतुष्पाद ॥ ८१ ॥]

तत्राष्टपदश्रीधवलमष्टपद्या वक्ष्यति । षट्पदस्तु अय यथा । क्रमान्मुखदले प्रथमेंह्रौ द्वौ षण्मात्रावेको द्विमात्रो द्वितीयाह्रौ तु द्वौ चतुर्मात्रौ तृतीये तु द्वौ षण्मात्रावेकश्चतुर्मात्रः । एव द्वितीयदलाह्रित्रयेपि यस्य तत्कीर्तिधवल छन्दः । दलद्वयेप्यस्य प्रत्येक आद्यतृतीयपादयोरनुप्रास' ॥

**उदा०—देसणगुणगव्विहिं गज्जउ । मज्चउ नाणिहिं ।**
**पवलवायभडवाइहिं भज्जउ ।**
**परिकित्तिधवलियसयलधर । जसघोससूरि ।**
**तुह समवड ण लहहि किंचि गणधर ॥ ३२·१ ॥**

[देशनागुणगर्वेण गर्जित । मत्तो ज्ञानेन ।
प्रबलवाग्भटवादिभिर्भक्त ॥
परिकीर्तिधवलितसकलधरो । यशोघोषसूरे ।
त्वत्समो न लभ्यते कोपि गणधर. ॥ ३२·१ ॥]

'समवड'त्ति समतुलावडशब्दा. समितार्था. । चतुष्पदश्च गुणधवलादिः । स च महाग्रन्थेभ्यो ज्ञेय । धवलोपलक्षणान्मङ्गलार्थसबद्धं छन्दो मङ्गलम् । यदाहुः—

उत्साहहेलावदनाडिलाद्यैर्यद्गीयते मङ्गलवाचि किंचित् ।
तद्रूपकाणाममिधानपूर्वं छन्दोविदो मङ्गलमानमन्ति ॥ ८२ ॥

तथा—तैरेव धवलव्याजात्पुरुष. स्तूयते यदा ।
तद्वदेव तदानेको धवलोप्यमिधीयते ॥ ८३ ॥

कोर्थ. । येनैवोत्साहादिना मङ्गलधवलभाषागाने कृते तन्नामाद्ये मङ्गलधवले । तथाहि । उत्साहमङ्गलम् । हेलामङ्गलम् । वदनमङ्गलम् । अडिलामङ्गलम् ॥ आदिशब्दात् रासावलयमङ्गल दोहकमङ्गलादि च ज्ञेयम् । एव उत्साहधवलाद्यपि वाच्यम् । किंच येनैवोत्साहादिना देवो गीयते तत्फुल्लडकम् । तथा चतुर्मात्रत्रिकमेको द्विमात्रो यत्राह्रिचतुष्टये यस्य कस्यचिद्गाने झम्बटकम् । यच्छन्द कन्दली—

उच्छाहवयणहेलाढोहयपमुहेहिं गिज्जए पुरिसो ।
जेहिंचिय धवलमिसेण तन्नाममुच्चए धवलं ॥ ८४ ॥

यन्मगलावि तन्नाममुच्चए मगलत्थसंबद्धं ।
फुल्लडय सुरगाणे झबटय टतिगका गाणे ॥ ८५ ॥

[उत्साहवदनहेलादोहकप्रमुखैर्गीयते पुरुष. ।
यैरेव धवलमिषेण तन्नामोच्यते धवलम् ॥ ८४ ॥
यन्मङ्गलादपि तन्नामोच्यते मङ्गलार्थसंबद्धम् ।
फुल्लटक सुरगाने झम्बटक टत्रिकका गाने ॥ ८५ ॥] इति ॥ ३२ ॥

**वत्थुवयणाइ उल्लालसंजुयं छप्पयं दविढछंदं ।**
**कव्वं वा, अह मत्ता उल्लालयसंगया फुल्लं ॥ ३३ ॥**

[वस्तुवदनादि उल्लालसंयुत षट्पदं सार्धच्छन्द. ।
काव्य वा, अथ मात्रा उल्लालकसंगता फुल्लम् ॥ ३३ ॥]

वस्तुवदनमादिर्यस्य रासावलयसंकीर्णकवदनादिछन्दःसमूहस्य तत् उल्लालकेन कुङ्कुमेन कर्पूरेण च सपृक्त छन्द· षट्पदाख्य सार्धच्छन्द सज्ञ काव्यसज्ञ वा ज्ञेयम् । यदाह—

जइ वत्थुआण हिट्ठे उल्लाला छद्यमि किज्जति ।
दिवड्डच्छदयछप्पयकव्वाइ ताइ वुच्चति ॥ ८६ ॥

[यदि वस्तुकानामध उल्लालाश्छन्दासि क्रियन्ते ।
सार्धच्छन्द षट्पदकाव्यानि तान्युच्यन्ते ॥ ८६ ॥]

**उदा०—पिच्छ प्पओसि समग्गपिहियगयणंगणमग्गह**
**गहिरमज्झमुज्झंतलोयलोयणऊसवग्गह ।**
**तलदिप्पंतपईवपंतिनिम्मलमणिविंदह**
**उड्डामपतमतिमिरनियरउद्दामसमुद्दह ॥**
**ससिखंडु लहरिहेलुल्लसिरवियडसिप्पसंपुडसमु ।**
**पसयच्छि तरलतारयनिवहु नज्झइ घणु फेणुग्गमु ॥ ३३·१ ॥ [छप्पओ] ।**

**सूरिलच्छिमणिहारफुरियकिरणुक्करसुंदरु**
**मुहमणहरहरिणंकविंबजुण्हाभरसोयरु ।**
**वयणकुहरविहरंतवाणिदेहच्छविविब्भमु**
**सच्छप्पयनहनिवहवहलउम्मुहमोहोवमु ॥**
**समखीरजलहिलहरीलडहु कित्तिकणइकुसुमप्पवरु ।**
**मह गुरुहु तुहु दीसइ कटरि देसणखणि दसणंसुभरु ॥ ३३·२ ॥**

[प्रेक्षस्व प्रदोषे पिहितसमग्रगगनाङ्गणमार्गस्य
गम्भीरमध्यमुह्यल्लोकलोचनोत्सवर्गस्य ।
तलदीप्यमानप्रदीपपङ्क्तिनिर्मलमणिवृन्दस्य
उद्दामप्रतमतिमिरनिकरोद्दामसमुद्रस्य ॥
शशिखण्ड लहरिहेलोल्लसनशीलविकटशुक्तिसपुटसमम् ।
प्रसताक्षि तरल्तारकानिवहो ज्ञायते घन फेनोद्गम ॥ ३३ १ ॥

सूरिलक्ष्मीमणिहारस्फुरितकिरणोत्करसुन्दरो
मुखमनोहरहरिणाङ्कविम्बज्योत्स्नाभरसोदर ।
वदनकुहरविहरद्वाणीदेहच्छविविभ्रम
स्वच्छपदनखनिवहवहलोन्मुखमयूखोपम ॥
शमक्षीरजलधिलहरीलटभ. कीर्तिलताकुसुम प्रवरम् ।
मम गुरोस्तव दृश्यते भो देशनासमये दशनांशुभर ॥ ३३ २ ॥]

सच्छपयेत्यादि। स्वच्छपदनखनिवहवहलोन्मुखमयूखोपमम्। 'न वा मयूखलवणचतुर्गुणचतुर्थचतुर्दशचतुर्वारसुकुमारकुतूहलोदूखलोलूखले' (हे० ८·१ १७१) इति आदिस्वरस्य सस्वरव्यञ्जनेन सह ओकार'। 'कणइ'त्ति लता। 'तुहु'त्ति तुहुश्च प्राग्वत्। 'कटरि'त्ति विस्मये ॥ ३३·२ ॥

रासावलयस्य कुङ्कमेन यथा—

जयरि(इ अ) झलक्कहिं [नयण] दीहनयणिअहि त खणु
केअइकुसुमदलग्गि भसलु विलसइ त जणु ।
जइ य तीइ मुहहावि मंदहासउ चडइ
ता जणु हीरइ पोम्मरायसचउ झडइ ॥
जइ तीइ महुरमियभासणिहि वयणगुंफु निसुणिज्जइ ।
ता धुउ करिप्पि जणु अमयरसु कन्नपन्नपुडि पिज्जइ ॥ ८७ ॥

[यदि च चकास्ति नयन दीर्घनयनाया तत् क्षणं
केतकीकुसुमदलाग्रे भ्रमरो विलसति तदा जाने ।
यदि च तस्या मुखहावे मन्दहास आरोहति
तदा जाने हीरके पद्मरागसचय पतति ॥
यदि तस्या मधुरमितभाषिण्या वचनगुम्फो निश्रूयते ।
तदा ध्रुव कृत्वा जाने अमृतरस कर्णपर्णपुटेन पीयते ॥ ८७ ॥]

रासावलयस्य कर्पूरेण यथा—

परहुयपचमसवणसभय मन्नउ स किर
तिंमणि भणइ न किंपि मुद्धि कलयठि गिर ।
चदु न दिक्खण सक्कइ जं सा ससिवयणि
दप्पणि मुह न पलोअइ तिंमणि मयनयणि ॥
वइरिउ मणि मन्नवि कुसुमसरु खणिखणि सा बहु उत्तसइ ।
अच्छरिउ रूवनिहि कुसुमसरु तुह दसणु जं अहिलसइ ॥ ८८ ॥

[परभृतपञ्चमश्रवणमभया मन्ये सा किल
तस्माद् भणति न किमपि मुग्धा कलकण्ठी गिरम् ।
चन्द्र न द्रष्टु शक्नोति यत्सा शशिवदना
दर्पणे मुख न प्रलोकयति तस्मान्मृगनयना ॥
वैरिण मनसि मत्वा कुसुमशर क्षणेक्षणे सा बहूत्त्रसति ।
आश्चर्यं रूपनिधे कुसुमशर तव दर्शन यदभिलषति ॥ ८८ ॥]

वस्तुवदनकरासावलयसकीर्णस्य कुङ्कुमेन यथा—

पडिगंडयलपुलयपयरपयडणवद्घायरु
कचिवालवालाविलासवहलिमगुणनायरु ।
द्रविडिदिव्वचपयचयपरिमलल्हसडउ
कुतलिकुतलद्प्पकडप्पणलपडउ ॥
[मरहट्ठिमाणनिद्दाहवयविहवविद्दसणसकउ ।]
कसु करइ न मणि हल्लोहलउ मलयानिलहु झुलक्कउ ॥ ८९ ॥

[पाण्ड्य[स्त्री]गण्टतलपुलकप्रकरप्रकटनव्द्धादर
काञ्चीपालवालाविलासवहलिमगुणनागर ।
द्रविटीदिव्यचम्पकचयपरिमलोहामित
कुन्तलीकुन्तलदर्पवर्धनलम्पट ।
महाराष्ट्रीमान विभवविध्वसनशक्त ।
कस्य करोति न मनसि क्षोभ मल्यानिलस्य पात ॥ ८९ ॥

कर्पूरेण यथा—

अविहडअवरुप्परुप्परूढगुणगठिनिबद्धउ
एयारिण हलि गलइ पिम्मु सरलिमवसलद्धउ ।
माणमडप्फरु तुह न जुत्तु उत्तमरमणि
तिंभणि वारउ वारवार वारणगमणि ॥
अह करहि कलहु वल्लहिण सहु इच्छि म इच्छिउ पणयसुहु ।
माणिक्कि मणंसिणि करिठवहु हिहि खिल्लिताजूड तुहु ॥ ९० ॥

[अविघट परस्परोढगुणग्रन्थिनिवद्ध
एतादृशेन सखि गलति प्रेम सरलिमवशलब्धम् ।
मानगर्वस्तव न युक्त उत्तमरमणि
ततो वारयामि वारवारं वारणगमनि ।
अथ करोषि कलह वल्लभेन सह, इच्छ मेष्ट प्रणयसुखम् ।
* * * मनस्विनि * * * * * त्वम् ॥ ९० ॥]

रासावलयवस्तुवदनकसकीर्णस्य कुङ्कुमेन यथा—

सवणनिहियहीरयहसतकुंडलजुयल
थूलामलमुत्तावलिमडिअयणकमल ।
सेअंसुयपंगुरण वहलसिरिहडग्गुज्जल
वहुपहुल्लविअइल्लफुल्लफुल्लावियकुंतल ।
तो पयडत्थयदंसणजणियखलयणडरभरभारिय
अहिसरइ चदसुंदरनिसिहि पइं पिययम-अहिसारिय ॥ ९१ ॥

[श्रवणनिहितहीरकहसत्कुण्डलयुगला
स्थूलामलमुक्तावलिमण्डितस्तनकमला ।
श्वेतांशुकप्रावरणा वहलश्रीखण्डरसोज्ज्वला
वहुप्रफुल्लविकचिल्पुष्पपुष्पायितकुन्तला ॥
तत प्रकटार्थदर्शनजनितखलजनभयभरभारिणी ।
अभिसरति चन्द्रसुन्दरनिशाया त्वा प्रियतम अभिसारिका ॥ ९१ ॥]

कर्पूरेण यथा—

तरुणिहूणिगंडप्पहपुंछिअतिमिरमसि
उक्कचुलुक्कावडणु दुसहु मा करउ ससि।
मलयानिलु मयनयणि घुणियकप्पूरकयणि(लि)वणु
सभुक्कियमयणग्गिहु सहि मा दहउ तुज्झ तणु ॥
तणुअंगि म खडहडि पडहि तुहु मयणवाणवेयणकलइ ।
चय माणु माणिवल्लहिण सहुं चडि म जीयससयतुलह ॥ ९२ ॥

[तरुणीहूणीगण्डप्रभाप्रोञ्छिततिमिरमसि
उल्काचुलुकपातन दु सहं मा करोतु शशी ।
मलयानिलो मृगनयने घूर्णितकर्पूरकदलीवन
सधुक्षितमदनाग्नि सखि मा दहतु तव तनुम् ॥
तन्वङ्गि मा कष्टे पत त्व मदनवाणवेदनाकलया ।
त्यज मान मानिवल्लभेन सह आरोह मा जीवसशयतुलाम् ॥ ९२ ॥]

वदनकस्य कुङ्कुमेन यथा—

जइ तुहु महु करयलु उम्मोडिवि
चल्लिय चीरचलु अच्छोडिवि ।
माणिणि तुवि पसाउ करि सुम्मउ
पइ पिइ उत्तावलिय म गम्मउ ॥
जइ किंवइ विसवइ पयजुयलु इह विहिवसिण विहट्टइ ।
ता तुज्झ मज्झु खीणउ खरउ किं म खामोअरि तुट्टइ ॥ ९३ ॥

[यदि त्वं मम करतलमुन्मुच्यापि
चलिता चीराञ्चलमाच्छिद्यापि ।
मानिनि ततोपि प्रसादं कृत्वा श्रूयतां
त्वया प्रिये उत्सुके मा गम्यताम् ॥
यदि किमपि • • • • पदयुगलमिह विधिवशेन विघटते ।
तदा तव मध्य. क्षीण खर. किं न क्षामोदरि त्रुट्यति ॥ ९३ ॥]

कर्पूरेण यथा—

कि न फुल्लइ पाडल परपरिमल
महमहेइ कि न माहवि अविरल।
नवमालिय कि न दलइ पहिल्लिय
कि न उत्थरइ कुसुमभरि मल्लिय।
दीहियतलायसरितल्लडिहिं कि न पसाहि पउमिणि फुडइ।
तुवि जाइजायगुणसभरणुझाणुवि भसल हु मणि खुडइ ॥ ९४ ॥

[ किं न विकसति पाटल परपरिमल
गन्धं प्रसारयति किं न माधवी अविरलम्।
नवमालिका किं न दलति प्रघूर्णिता
किं न अवक्रामति कुसुमभरेण मल्लिका ॥
दीर्घिकातडागसरित्तल्पेषु किं न प्रसादेन पद्मिनी स्फुटति।
ततोपि जातजातिगुणसंस्मरणध्यानोपि भ्रमर खलु मनसि त्रुट्यति ॥ ९४ ॥ ]

षट्पदीप्रकरणम् ॥ ३३ २ ॥

अथ सप्तपदी। अथ मात्राजातिरुल्लालकाभ्यां कुङ्कुमकर्पूराभ्यां सगता फुल्लसंज्ञा। यन्मनोरथः—

जइ मत्ताजाईणं उल्लाला हेट्ठयंमि दीसंति।
ता ताइं सव्वाइं फुल्लयनामेण कहियाइं ॥ ९५ ॥

[ यदि मात्राजातीनामुल्लाला अधस्ताद् दृश्यन्ते।
तदा तानि सर्वाणि फुल्लकनाम्ना कथितानि ॥ ९५ ॥ ]

उदा०—विहियभर वइसवइघरदास। रसु साहिउ दुद्धरिसु।
हणिउ असुर वब्बरु भयंकरु ॥
छद्दरिसणदिट्ठसम। खत्ति रज्ज पालिउ निरंतरु।
पूइयकइंदवंदिणविवुहवरसुरकित्तण कारिय।
जयसिंहदेवराइहिं भुवणि कित्तिरिद्धि वद्धारिय ॥ ३३·३ ॥

रामपंडवभरहहरियंद। णलपमुहिहिं जणजणह। पुत्तभावु पडिवज्झि कूरिहि।
विलवंतह तियजणह। ज किर हरिउ पत्थिविहिं भूरिहि ॥
मुग्गदु त मुक्कु पइं पाउ भणि तिणु जिव तिहुणप्पालसुय।
उप्फुल्लवयण कि ण जण मुणहि, त्तिणि कुमरेस चरित्त तुय ॥ ३३ ४ ॥ [फुल्लो]।

[ विहितभरो वैश्यपतिः गृहदास। रस साधितो दुर्धर्ष।
हत असुर ... भयंकर ॥
षड्दर्शनदृष्टश्रम। ... पालित ....।
पूजितकवीन्द्रवन्दिविबुधवरसुरकीर्तनं कारयित्वा।
जयसिंहदेवराजेन भुवने कीर्ति-ऋद्धिर्वर्धिता ॥ ३३ ३ ॥

रामपाण्डवभरतहरिश्चन्द्र–। नलप्रमुखैर्जनस्य जनस्य। पुत्रभाव प्रतिपद्य क्रूरे ॥
विलपत स्त्रीजनस्य। यत्किल हृत पार्थिवैर्भूरिभि ॥
मृतस्व तन्मुक्त त्वया पाप भणित्वा तृणमिव त्रिभुवनपालस्तुत।
उत्फुल्लवदन किं न जानाति जनस्तेन कुमरेश चरित्र तव ॥ ३३ ४ ॥]

'पडिवज्जि'त्ति प्रतिपद्य। 'मुग्गदु'त्ति मृतस्वम्। 'भणि'त्ति भणित्वा। 'क्त्वा–इ–इउ–इवि अवय' (हे० ८ ४·४३९) इति त्वास्थाने इ.। एव शेषभेदेषूदाहार्यम्। सप्तपदीप्रकरणम् ॥३३·४॥

अथाष्टपदी—

**विसमेसु टतिगकेहिं समेसु टदुगेण चउसु सिरिधवलं।**
**विसमसमपयणुपासं, अह तरलं दोहसंदोहा ॥ ३४ ॥**

[विषमेषु टत्रिककै समेषु टद्विकेन चतुर्षु श्रीधवलम्।
विषमसमपादानुप्रासं, अथ तरलं दोहसंदोहौ ॥ ३४ ॥]

विषमेषु चतुर्षु पादेषु त्रिभिश्चतुर्मात्रैरेकेन द्विमात्रेण, समेषु चतुर्षु पादेषु द्वाभ्यां चतुर्मात्राभ्यां श्रीधवल छन्दो विषमसमपादानुप्रास प्रथमस्याहेर्द्वितीयेनाह्निणा तृतीयस्य तुर्येण पञ्चमस्य षष्ठेन सप्तमस्याष्टमेनानुप्रास इत्यर्थः। अथ दोहसदोहौ तरल छन्द। दोहशब्देनेह दोहकजातिर्गृह्यते ततो दोहकावदोहकोपदोहकोद्दोहकादीनां सग्रहः। यन्मनोरथ:—

जइ दोहयाण हिट्ठे दीसइ सदोहओ इह (?) रइओ।
ता ते सव्वे छदमि तरलनामेण नायव्वा ॥ ९६ ॥

[यदि दोहकानामधस्ताद दृश्यते सदोहको रचित ।
तदा ते सर्वे छन्दसि तरलनाम्ना ज्ञातव्या ॥ ९६ ॥]

**उदा०—खीरसमुद्दिण लवणजलहि। कुवलय कुमुइहिं।**
**कालिंदी सुरसिंधुजलिण। महुमहणु हरिण ॥**
**कइलासिण सरिसउ हु किरि। सो अजणगिरि।**
**इह तुह जससिरिधवलिओ पहु। किं पंडरु न हु ॥ ३४·१ ॥**

सिरिधवल हेमसूरिस्स (V 33)

**धणु जुव्वणु जीविय सयलु। चंचलु जिम्व करिकन्नु।**
**खणि खणि करयलि नीरु जिम्व। गलइ रूवलायन्नु ॥**
**अवरइ अविरलविज्जुलवलय–। विलसियतरल पयत्थ।**
**तुइ वढ धम्मुज्जमसढिलमण। जण अच्छइ वीसत्थ ॥ ३४·२ ॥**

[क्षीरसमुद्रेण लवणजलधि । कुवलयानि कुमुदै ॥
कालिन्दी सुरसिन्धुजलेन। मधुमथनो हरेण ॥
कैलासेन सदृश खलु कृत । सोऽजनगिरि ॥
इह तव यश श्रीधवलित प्रभो। किं पाण्डुर न खलु? ॥ ३४·१ ॥

धन यौवनं जीवित सकल । चञ्चलं यथा करिकर्ण ।
क्षणे क्षणे करतले नीर यथा । गलति रूपलावण्यम् ॥
अपरमपि अविरलविद्युद्वल्य– । विलसिततरला पदार्थाः ॥
ततोपि मूढो धर्माधमशिथिलमना । जनो भवति विश्वस्त. ॥ ३४ २ ॥]

'वढ'त्ति शीघ्रादौ 'मूढस्य नालिअवढौ'इति । (हे. ८·४·४२२) ॥ ३४·२ ॥

वत्थुय दोहा दोहय वत्थुवयण तह य दुवइगीईओ ।
हुंति दुहंगी नामा वत्थू दोहाइजुयमत्ता ॥ ३५ ॥

[ वस्तु च दोहा; दोहा च वस्तुवदनं; तथा च द्विपदीगीत्यौ ।
भवन्ति द्विभङ्गी नाम, वस्तु दोहादियुतमात्रा ॥ ३५ ॥ ]

'वत्थु'त्ति 'वत्थुवइ'त्ति वस्तुवदनं तदुपरि तदादौ च दोहकस्तथा च द्विपद्युपरि गीति-द्विभङ्गीसञ्ज्ञा' स्यु' । द्वौ भङ्गौ छन्दसी यस्या सा द्विभङ्गी ॥ ३५ ॥

उदा०—अरिरि मयण रइवयणकमलदंसणु खणु वज्जह
अरिरि कालपरिवाससिढिलवंधणु धणु सज्जह ।
अरिरि वीरहरिणंकचूडलूडणु सरु संधह
अरिरि हठिण उज्जंति जंतु मह वल्लहु रुंधह ॥
इम्व वुल्लंती राइमइ । सामिय वहुसोहग्ग ।
असुजलुल्लयलोयणिय । तुह किम्व चित्ति न लग्ग ॥ ३५·१ ॥
दुहंगिया सूरप्पहसूरिस्स ।

मइं मिल्लिउ म न जाह तुह । कंत वसंतपवेसि ।
चूउ न वाहह उत्थरिउ । विरहिणिमारणरेसि ॥
विरहिणिमारणरेसि गुंदिसन्नाहु सुदिढु करि
कि न वाहह उत्थरिउ चूउ अविरलदलडवरि ।
कंत वसंतपवेसि विरहदुहघंघलिं घल्लिउ
अहह म जाह अणाहदीणदुम्मइ मइ मिल्लिउ ॥ ३५·२ ॥
दुहंगिया ।

[ अरेरे मदन रतिवदनकमलदर्शनं क्षण वर्जय
अरेरे कालपरिवासशिथिलवन्धनं धनु सज्जय ।
अरेरे वीरहरिणाङ्कचूडालोडनं शरं संधेहि
अरेरे हठेनोज्जयन्तं गच्छन्तं मम वल्लभ रुधान ॥
इति वदन्ती राजीमति' । स्वामिन् वहुसौभाग्या ।
अश्रुजलार्द्रलोचनी । तव किं चित्ते न लग्ना ॥ ३५ १ ॥

मां त्यक्त्वा मा यासीस्त्वं । कान्त वसन्तप्रवेशे ।
चूतो न बाहुभिरास्तीर्णो । विरहिणीमारणार्थम् ? ॥
विरहिणीमारणार्थं मञ्जरीसन्नाह सुदृढ कृत्वा
किं न बाहुभिरास्तीर्णश्चूतोऽविरलदलभरेण ? ।
कान्त वसन्तप्रवेशे विरहदु खमोहे क्षिप्त्वा
अहह मा याहि अनाथदीनदुर्मतिं मा त्यक्त्वा ॥ ३५ २ ॥]

'गुदि'त्ति मञ्जिरी । 'घघलि'त्ति शीघ्रादौ झगटकस्य घंघलः । अत्राम्नायः । दोहकपदानि प्रतिलोम वस्तुवदनकपदेष्वावर्तनीयानि ॥ ३५·२ ॥

उदा०—घरि घरि धेणुदोहदहिमंथविलोडणघोसु घुम्मए
वंखणवेयपढणधुणि वंदीण जयजयसद्दु सुम्मए ।
तक्खणि मुत्तु कहवि निद्दालसु कामुयजणुवि बुज्झए
धारणिवंधि जित्थु नारियणि अविरलु सलिलु बुज्जए ॥
सा वहलकमलपरिमलमिलंतरोलंवरोलरमणीया ।
मंगलनिवहावंझा दिणमुहसंझा नरिंद तुह होउ ॥ ३५ ३ ॥

[गृहेगृहे धेनुदोहदधिमन्थविलोडणघोषो घूर्णते
व्याख्यानवेदपठणध्वनिर्वन्दीना जयजयशब्द श्रूयते ।
तत्क्षणे मुक्त कथमपि निद्रालस कामुकजनोपि बोध्यते
धारणिवन्धे यत्र नारीजनेनाविरल सलिलमुह्यते ॥
सा वहलकमलपरिमलमिलद्रोलम्वरवरमणीया ।
मङ्गलनिवहावन्ध्या दिनमुखसंध्या नरेन्द्र तवास्तु ॥ ३५·३ ॥]

'रोलम्वरोलु'त्ति भ्रमररवः । तथा चेति चकारादन्यैरपि छन्दोभिर्द्वन्द्वितैर्द्विभङ्गी स्यात् । यथा गाथाया भद्रिकायोगे—

केलिक्खभा ऊरू नाही वावी मुणालिया बाहा ।
नयणाइं कुवलयाइ दसणा उण कुदकलियाओ ॥
छणससिमंडलमाणण पाणीपाया य तुज्झ पउमाइ ।
सिसिरोवयारमइयासि किं तहवि दिवाणिसं दहेसि दइए ॥ ९७ ॥

[कदलीस्तम्भावूरू, नाभिर्वापी, मृणालिके बाहू ।
नयने कुवलये, दशना पुन कुन्दकलिका ॥
क्षणशशिमण्डलमानन पाणी पादौ च तव पद्मानि ।
शिशिरोपचारमय्यसि किं तथापि दिवानिश दहसि दयिते ॥ ९७ ॥]

अष्टपदीप्रकरणम् ॥ ३५·३ ॥

अथ नवपदी । दोहकादियुता मात्राजातिर्वस्तुसज्ञा । रड्डेत्यन्ये । आदिशब्दादवदोहकोपदोहक-परिग्रह.

उदा०—पुव्वपव्वयरायसियछत्तु । तमकुंजरपंचमुहु । रयणिरमणिमाणिक्कदप्पणु ।
नहकमलाकरकमलु । अमयकलसु जगदाहझम्पणु ॥
संभुजटालयणीकुसुमु । कंदप्पदुमकंदु ।
सयलवत्थुअत्थिक्ककरु । तो उम्मिल्लइ चंदु ॥ ३५·४ ॥ वत्थु ।

[ पूर्वपर्वतराजसितच्छत्र । तम कुञ्जरपञ्चमुखो । रजनिरमणीमाणिक्यदर्पण. ॥
नभ कमलाकरकमलं । अमृतकलशो जगद्दाहशामक. ॥
शम्भुजटालताकुसुम । कन्दर्पद्रुमकन्द ॥
सकलवस्त्वास्तिक्यकर । तत उन्मीलति चन्द्र ॥ ३५·४ ॥ ]

'लयणि'त्ति लता । एवमेवावदोहकोपदोहकयोरप्युदाहार्यम् । नवपदीप्रकरणम् ॥ ३५·४ ॥

अथ दशपदी ।

दोहय घत्ताउ दुहंगिया, अहुल्लालसंजुया वत्थू ।
होइ तिहंगी अह खंडजुयलगीई दुवइखंडं ॥ ३६ ॥

[ दोहा च घत्ता द्विभङ्गी, अथोल्लालसंयुता वस्तु. ।
भवति त्रिभङ्गी, अथ खण्डयुगल गीतिश्च द्विपदीखण्डम् ॥ ३६ ॥]

दोहकजात्यन्ते घत्ताजातिरेवमपि द्विभङ्गी ॥ ३६ ॥

उदा०—को नेसइ संदेसडा । सहि देसडाति दूरि ॥
वंदिमुहि पडइ संठविउ । गुरु सूरप्पहसूरि ॥
इम्व गुट्ठिट्ठिय । गुरु उक्कंठिय । अविरल रहमुत्ताल ।
भुल्लइ रंगिहिं । नवनवभंगिहिं । माल(व)देसीवाल ॥ ३६·१ ॥
दुहंगी तिलयसूरिस्य ।

[ को नेष्यति संदेश । स हि देशोति दूरे ॥
. । गुरु सूरप्रभसूरि ॥
इति गोष्ठीस्थित । गुरुरुत्कण्ठित । . . ॥
। . । ॥ ३६·१ ॥]
द्विभङ्गी तिलकसूरे ॥

दशपदीप्रकरणम् ॥ ३६·१ ॥

अथैकादशपदी । अथोल्लालकाभ्यां सयुता 'वत्थु'त्ति वस्तुजातिस्त्रिभङ्गी भवति । त्रयो भङ्गाश्छन्दस्त्रयरूपा अस्या सा त्रिभङ्गी ।

उदा०—गहिरु जलहरमुरव वज्जंति । घणु नच्चहि विज्जुलिय ।
महुर मोर गायंति सुस्सर ।
दद्दुरव घग्घरिय । रुणझुणंति घणघोसनिब्भर ॥
चप्पीहयवंदिणवि सर । लद्धावसर रसंति ।
जलधाराधोरणिमिसिण । वायण पयउ पडंति ॥

इम्व निब्भरु वट्टइ धरवलइ सयललोयरतियावणउ ॥
सहरिसअणंगनिवसच्चविउ अहिणवु पाउसपिक्खणउ ॥ ३६ २ ॥ तिहंगी ।

[ गम्भीरा जलधरमुरजा वाद्यन्ते । वहु नृत्यति विद्युत् ।
मधुरं मयूरा गायन्ति सुस्वरम् ॥
दर्दुररवघर्घरिका । रुणझुणन्ति घनघोपनिर्भरा ॥
चातकवन्दीनामपि स्वरा । लब्धावसरा रसन्ति ॥
जलधाराधोरणिमिषेण । वायनानि प्रकट पतन्ति ॥
इति निर्भरं वर्तते धरावलये सकललोकरतिदायकम् ।
सहर्षानङ्गनृपदृष्टमभिनव प्रावृट्प्रेक्षणकम् ॥ ३६ २ ॥ ]

एकादशपदीप्रकरणम् ॥ ३६ २ ॥

अथ द्वादशपदी । खण्डयुगलान्ते गीतिः सामान्येन त्रिभङ्गी, विशेषेण द्विपदीखण्डम् ।

उदा०—कुसुमाउहपियदूययं । मउलावितो चूययं ।
सिढिलियमाणग्गहणओ । वायइ दाहिणपवणओ ॥
वियलियवउलामेलओ । इच्छियपियममेलओ ।
पडिवालणअसमत्थओ । तम्मइ जुवईसत्थओ ॥
इय पढमं महुमासो जणस्स हिययाइं कुणइ मउयाइं ।
पच्छा विंधइ मयणो लद्धप्पसरेहिं कुसुमवाणेहिं ॥ ३६·३ ॥
दुवईखंडं सिरिहरिसएवस्स ।

[ कुसुमायुधप्रियदूतक । मुकुलयश्चूतकम् ।
शिथिलितमानग्रहणो । वाति दक्षिणपवन ॥
विगलितवकुलामेलक । इच्छितप्रियतममेलन ।
प्रतिपालनासमर्थ । ताम्यति युवतिसार्थ ॥
इति प्रथम मधुमासो जनस्य हृदयानि करोति मृदूनि ।
पश्चाद्विध्यति मदनो लब्धप्रसरै कुसुमवाणै ॥ ३६ ३ ॥]
द्विपदीखण्डं श्रीहर्षदेवस्य ( रत्नावली I 14-16 ) ॥ स्पष्टम् ॥ ३६ ३ ॥

घत्तादुयं दुहंगी, तिहंगिया दुवइखंडगीईओ ।
पज्झडियाइचउक्कं कडवं, ताणं गणो संधी ॥ ३७ ॥

[ घत्ताद्वय द्विभङ्गी, त्रिभङ्गिका द्विपदीखण्डगीतय· ।
पज्झटिकादिचतुष्क कडव, तेषां गण. संधि. ॥ ३७ ॥ ]

घत्ताजात्यन्ते घत्ताजातिरेवापि द्विभङ्गी ॥ ३७ ॥

उदा०—किणि अवरिहि वुज्झिउ । मुग्गडु उज्झिउ । वारिउ जूउवि वेयरिउ ॥
कयधम्मब्भंसह । महुरामंसह । नाउवि मूलह निट्ठविउ ॥
मरणब्भयभीयहं । सव्वहं जीयहं । वज्झाविउ अभयप्पडहु ।
रे रायहु रहसिहिं । सहुं कुमरसिहिं । तुडिवडंत किं न सडिपडहु ॥ ३७·१ ॥
दुहंगिया ॥

[कैरपरैर्बुध्यते । मृतस्त्वमुज्झितम् । वारितं द्यूतमपि वैरीभूतम् ॥
कृतधर्मभ्रंशयो । मदिरामासयो. । नामापि मूलतो निर्नाशितम् ॥
मरणभयभीताना । सर्वेषा जीवानां । वादितोऽभयपटह ? ॥
रे राजानो रभसेन । स्वय कुमारसिंहेन । तोषमाना किं न शौर्यंथ ॥ ३७·१ ॥

रेशब्दः संभाषणे (हे. ८२·२०१)। 'तुडि'त्ति संरंभे। प्राग् द्विपदी ततः खण्डत्ति गूचना (?) वलम्बकस्तदन्ते गीतिरियमपि त्रिभङ्गी ॥ ३७·१ ॥

**उदा०—विरहिणिहिययघोरवज्जासणिनिवडणघोसभेरवा**
**पसरहि मयणरज्जपयासणपणवा कोइलारवा ।**
**वाइहिं मलयपवण घणमाणिणिमाणधणिक्कतक्करो**
**निद्दयसुरयसमरसम्मद्दकिलामियमिहुणसुहयरो ॥**
**दोला लोला चालिया । ससिरीया वणमालिया ।**
**असिसिरउण्हा वासरा । रयणी जुण्हामणहरा ॥**
**इय एरिसे वसंते महुयरहुंकारमुहलियवणंते ।**
**मुत्तूण ममं वच्चंत कंत अच्चंतकठिणचित्तोसि ॥ ३७·२ ॥** तिहगिया ।

[विरहिणीहृदयघोरवज्राशनिनिपतनघोषभैरवा
प्रसरन्ति मदनराज्यप्रकाशनपणवा कोकिलारवा ॥
वाति मलयवातो घनमानिनीमानधनैकतस्करो
निर्दयसुरतसमरसंमर्दक्लान्तमिथुनसुखकर ॥
दोला लोला चालिता । सश्रीका वनमालिका ॥
अशिशिरोष्णा वासरा । रजनी ज्योत्स्नामनोहरा ॥
इतीदृशे वसन्ते मधुकरहुंकारमुखरितवनान्ते ।
मुक्त्वा मा व्रजन् कान्त अत्यन्तकठिनचित्तोऽसि ॥ ३७ २ ॥]

स्पष्टा ॥ ३७·२ ॥ अन्यैरपि छन्दोभिः श्रुतिसुखैस्त्रिभिस्त्रिभिस्त्रिभङ्गी । तत्र पूर्वं मञ्जरी पश्चात्खण्डिता ततो भद्रिका यथा—

उच्छलंतछप्पयकलगीतिभगिघरे
विप्फुरंतकलयंठिकंठपञ्चमसरे ।
सज्जमाणहिंदोलालवणपसाहिए
चच्चरिपडहुद्दामसद्दसखोहिए ॥
वियसियरत्तासोयल्लए । केसरकुसुमामोअमए ।
पप्फुल्लियमायंदवणे । घणवोलिरदक्खिणपवणे ॥
इय एरिसमि चेत्तए जस्स ण पासमि अत्थि पियमाणुस ।
सो कह जियइ वयसिए विद्धो मयरद्धयस्स भल्लियाहिं ॥ ९८ ॥

[ उच्छलत्षट्पदकलगीतिभङ्गिधरे
　विस्फुरत्कलकण्ठीकण्ठपञ्चमस्वरे ।
　सज्जमानहिन्दोलाल्वनप्रसाधिते
　चर्चरीपटहोद्दामशब्दसक्षोभिते ॥
विकसितरक्ताशोकलते । केसरकुसुमामोदमये ॥
प्रफुल्लितमाकन्दवने । घनघूर्णमानदक्षिणपवने ॥
इतीदृशे चैत्रे यस्य न पार्श्वेऽस्ति प्रियमनुष्य ।
स कथं जीवति सखि विद्धो मकरध्वजस्य बाणै. ॥ ९८ ॥]

एते च द्विभङ्गीत्रिभङ्ग्यौ शीर्षकाख्ये । द्वादशपदीप्रकरणम् ॥ ३७.२ ॥

अथ षोडशपदी । पद्धडिकादिच्छन्दांसि चत्वारि चत्वारि कडवकम् । आदिशब्दाद्वदनादिपरिग्रहः । तेषा च कडवकाना गणः सन्धिसंज्ञः ।

उदा०—पुरुगुज्जरमंडली(लि) अइसमिद्धु । अणहिल्लनयरु णामिहि पसिद्धु ।
　तहि सिरिचाउक्कडवंसजाय । वणरायपमुह हुय वहुय राय ॥
　अह कालकमिण रणरंगमल्लु । रिउरायचक्कहियइक्कसल्लु ।
　चालुक्कवंसपंकयमरालु । तत्थासि नराहिवु कुमरवालु ॥
　वहुदिहिण वहुपरिकरिसमग्गु । तिणि सम्मु परिक्खिउ धम्ममग्गु ।
　जिणसासणु वहुगुणु भणि पवत्तु । न विवेयलक्खि तुलइ सयत्तु ॥
　नहलग्गसिहरजिणहरणिवेस । मणहर असेस तिणि विहिय देस ।
　तसु सरिसु नरेसरु मणुयलोइ । न हु हुवउ न होसइ नत्थि कोइ ॥ ३७ ३ ॥
कडव ।

[ पुरुगुर्जरमण्डले अतिसमृद्ध । नगरमणहिल्लनाम्ना प्रसिद्धम् ।
　तत्र श्रीचापोत्कटवंशजाता । वनराजप्रमुखा जाता वहवो नृपा ॥
　अथ कालक्रमेण रणरङ्गमल्ल । रिपुराजचक्रहृदयैकशल्यम् ॥
　चालुक्यवंशपद्कजमराल । तत्रासीन्नराधिप कुमारपाल ॥
　वहुदिवसैर्बहुपरिकरसमग्र । तेन सम्यक्परीक्षितो धर्ममार्ग ॥
　जिनशासनं वहुगुण भणित्वा प्रवृत्त । न विवेकलक्ष्ये तोल्यते सयत्न ॥
　नभोलग्नशिखरजिनगृहनिवेश । मनोहरोऽशेषस्तेन विहितो देश ॥
　तस्य सदृशो नरेश्वरो मनुजलोके । न खलु भूतो न भविष्यति नास्ति कोपि ॥ ३७ ३ ॥]

स्पष्टम् । सन्ध्युदाहरण प्रतीतम् । षोडशपदीप्रकरणम् ॥ ३७ ॥

## [इति] कविदर्पणवृत्तौ द्वितीयोद्देशः ।

# तृतीयोद्देशः ।

अथ वर्णच्छन्दः ।

इत्तो वुच्छं सव्वंपि लाहवत्थं सलक्खलक्खणयम् ।
वन्नच्छंदे वित्तं अहिकिज्जइ, तं पुणो तिविहम् ॥ १ ॥

[इतो वक्ष्ये सर्वमपि लाघवार्थं सलक्ष्यलक्षणकम् ।
वर्णच्छन्दे वृत्तमधिक्रियते तत्पुनस्त्रिविधम् ॥ १ ॥]

इतो मात्राच्छन्दसोनन्तर सर्वमपि वर्णच्छन्द उभयच्छन्दश्च सलक्ष्यलक्षणकं वक्ष्ये । तदेवोदाहरणं तदेव सूत्रमित्यर्थ । लक्षणकमित्यस्पार्थे क. । किमर्थं रीतिभङ्ग इत्याह—लाघवार्थम् । भिन्नलक्षणत्वे हि ग्रन्थगौरव स्यात् । मात्राच्छन्दस्तु लक्ष्यै. सुज्ञेयमिति तथोक्तम् । इद चादौ प्रपञ्चितमेव । तथा वर्णच्छन्दसि वृत्तमधिक्रियते । इतो यद्वक्ष्यते तद्वृत्ताख्यमित्यर्थः । तच्च स्थिरगुरुलघ्वक्षरविन्यासमिष्यते पाठनसयोगयोरभावात् । मात्राछन्दस्तु जात्याख्यम् ।

यदाह—

'पद्य चतुष्पदी तच्च वृत्तं जातिरिति द्विधा' इति । तत्पुनर्वृत्तं त्रिविधम् ॥ १ ॥

तथाहि—

सममद्धसमं विसमं तत्थ समं ताव तुल्लचउपायम् ॥
तुल्लद्धं अद्धसमं, अतुल्लसव्वप्पयं विसमम् ॥ २ ॥

[सममर्धसम विषम तत्र सम तावत्तुल्यचतुष्पादम् ।
तुल्यार्धमर्धसम, अतुल्यसर्वपाद विषमम् ॥ २ ॥]

समवृत्तमर्धसमवृत्त विषमवृत्तम् । तत्र त्रिके तावत्तुल्यलक्षणैश्चतुर्भिः पादैः समवृत्तम् । तुल्यलक्षणाभ्यामर्धाभ्यामर्धसमवृत्तम् । विसदृशै सर्वै. पादैर्विषमवृत्तम् ॥ २ ॥

तेसु समे एगक्खरमुहछव्वीसक्खरंतचउपाई ।
छव्वीस हुंति जाई, तो सेसं दंडया तत्तो ॥ ३ ॥

[तेषु समे एकाक्षरमुखषड्विंशत्यक्षरान्तचतुष्पाद्यः ।
षड्विंशतिर्भवन्ति जातयस्तत शेष, दण्डकास्तस्मात् ॥ ३ ॥]

तेषु त्रिषु समवृत्ते चतुर्णां पादाना समाहारश्चतुष्पादी । एकाक्षरादिः षड्विंशत्यक्षरान्ता चतुष्पादी यासु ता. षड्विंशतिर्जातयः स्युः । 'तो सेस' ति शेषजातिस्ततो दण्डकजातिः ॥ ३ ॥

उत्त अइउत्त मज्झा पइट्ठ सुपइट्ठ तह य गाइत्ती ।
उण्हिग अणुहुभ विहई पंती तिहुउ जगइअइजगई ॥ ४ ॥

सक्करिअइसक्करिया अट्ठी अइअट्ठि धिइ अ अइधिइउ।
किइ पाविसमभिउप्परा किई य जाईण नामाइं ॥ ५ ॥

[उक्तात्युक्ता मध्या प्रतिष्ठासुप्रतिष्ठे तथा च गायत्री।
उष्णिगनुष्टुब् बृहती पङ्क्तिस्त्रिष्टुप् जगत्यतिजगती ॥ ४ ॥
शक्वर्यतिशक्वर्यौ अष्टिरत्यष्टिर्धृतिरतिधृतिः।
कृतिः प्राविसमभ्युत्परतः कृतयश्च जातीनां नामानि ॥ ५ ॥]

उक्ता १ अत्युक्ता २ मध्या ३ प्रतिष्ठा ४ सुप्रतिष्ठा ५ तथा च गायत्री ६ उष्णिक् ७ अनुष्टुप् ८ बृहती ९ पङ्क्तिः १० त्रिष्टुप् ११ जगती १२ अतिजगती १३ शक्वरी १४ अतिशक्वरी १५ अष्टिः १६ अत्यष्टि. १७ धृति. १८ अतिधृति. १९ कृतिः २० प्र। आ। वि। सम्। अभि। उत्। एभ्यः परा कृतिश्च। प्रकृति. २१ आकृति. २२ विकृतिः २३ अभिकृति: २५ उत्कृतिः २६ जातीना नामानि। उक्ता नाम एकैकाक्षराद्दिभेदसग्रहात्मिका जातिस्तत. एकैकाक्षरवृद्धाह्वयोऽत्युक्तादयस्तत्र द्व्यक्षराद्दिरत्युक्ता। षड्विंशत्यक्षराद्दिरुत्कृति'।

## [इति] कविदर्पणवृत्तौ तृतीयोद्देशः।

# चतुर्थोद्देशः।

अथ जातीनामुपयोगिभेदानाह--

**गो गी ॥ १ ॥**

सर्वांह्रिषु एको गुरुर्गीश्छन्दः ॥ १ ॥ **उक्ता ॥ १ ॥**

**दो गा इत्थी ॥ २ ॥**

द्वौ गुरू स्त्रीच्छन्दः **अत्युक्ता** ॥२॥ एकेनाह्रिणा प्राकृते लक्ष्म वक्तुमशक्यमिति द्वाभ्यामुक्तम्। अतः परं त्वेकैकेन समानि, द्वाभ्यामर्धसमानि, चतुर्भ्येकपादैर्विषमाणि वैतालीयानि च वक्ष्यन्ते ॥२॥

**मो नारी ॥ ३ ॥ रो मृगी ॥ ४ ॥**

स्पष्टम् ॥ ३ ॥ ४ ॥ **मध्या ॥ ३ ॥**

**मो गो कन्ना ॥ ५ ॥ यगा वीला ॥ ६ ॥**

मो ग कन्या ॥५॥ यगौ व्रीडा ॥ ६ ॥ **प्रतिष्ठा ॥ ४ ॥**

**नन्दा तलगा ॥ ७ ॥ जया यो लगा ॥ ८ ॥**

तलगा नन्दा ॥ ७ ॥ यो लगौ जया ॥ ८ ॥ **सुप्रतिष्ठा ॥ ५ ॥**

**तो यो तणुमज्झा ॥ ९ ॥ यया सोमराई ॥ १० ॥**

तो यस्तनुमध्या ॥ ९ ॥ यौ सोमराजी ॥ १० ॥ **गायत्री ॥ ६ ॥**

**मो सो गो मयलेहा ॥ ११ ॥ हंसमाला रा गो ॥ १२ ॥**

मः सो गो मदलेखा ॥ ११ ॥ रौ गो हंसमाला ॥ १२ ॥ **उष्णिक् ॥ ७ ॥**

**दो मा दो गा विज्जूमाला ॥ १३ ॥ भो तलगा माणवगं ॥ १४ ॥**
**चित्तवया भगुरू दो ॥ १५ ॥ नारायओ तरा लगा ॥ १६ ॥**
**वसू लगा पमाणिया ॥ १७ ॥ उक्कमे समाणिया उ ॥ १८ ॥**
**इओ य अन्नं वियाणं ॥ १९ ॥**

मौ गौ विद्युन्माला। चतुर्भिर्यतिरनुक्तापि ज्ञेया ॥ १३ ॥ भस्तलगा माणवकम्। अत्रापि चतुर्भिर्यति ॥ १४ ॥ भौ गुरुश्चि (रू चि) त्रपदा ॥ १५ ॥ तरौ लगौ नाराचकः ॥ १६ ॥ वसवो लगाः प्रमाणिका। अष्ट निरन्तरा. लगाः प्रमाणिका ॥ १७ ॥ व्युत्क्रमे समानिका तु। प्रमाणिकाया विपर्यये समानिका पुनरष्टौ निरन्तरा गला इत्यर्थः ॥ १८ ॥ इतोन्यद्वितानम्। एभ्यः प्रागुक्तेभ्यो ग्रन्थान्तरोक्तेभ्यश्चकाराद्वक्ष्यमाणेभ्य अन्यसमवृत्त वितानम् ॥ १९ ॥ **अनुष्टुभ् ॥ ८ ॥**

**रो नसा किर हलमुखी ॥२०॥ मो नो यो मगरलयाए ॥२१॥**
**नसयघडिया विसाला ॥२२॥**

रो नसौ हलमुखी ॥ किलेत्याप्तोक्तौ ॥२०॥ मो नो यो मकरलतायाम् ॥२१॥ नसयघटिता विशाला ॥२२॥ बृहती ॥९॥

**मोरसारणी रजा रगंता ॥२३॥ सो सो सुद्धविराडिया जगा ॥२४॥**
**नरजगा इमा मणोरमा ॥२५॥ चम्पकमालेयं भमसा गो ॥२६॥**

रजौ रगान्तौ मयूरसारणी ॥२३॥ मः सो जगौ शुद्धविराट् ॥२४॥ नरजगद्वय (?) इय मनोरमा ॥२५॥ भमसा गश्चम्पकमालेयम् ॥२६॥ पङ्क्तिः ॥१०॥

**रो नरा लहुगुरू रहुद्धया ॥२७॥ सागया उ रनभा दुगुरंता ॥२८॥**
**भत्तिग दोगुरु दोधयछंदं ॥२९॥ ननरलहुगुरूहिं भद्दिया ॥३०॥**
**रो जरा लहु(हू)गुरू य सेणिया ॥३१॥ नजजलहू सगुरू सुमुखी ॥३२॥**
**नजुगसगणदुगुरू चित्ता ॥३३॥ तो जो जगगत्ति उवट्ठिया सा ॥३४॥**
**उवट्ठियमिमं जो सो तगा गो ॥३५॥ मो दो ता गा सालिणी सायरेहिं ॥३६॥**
**वाउम्मी मो तह भो तो गुरू दो ॥३७॥ तो तो जगा गो पुण इंदवज्जा ॥३८॥**
**उविंदवज्जा जतजा गुरू दो ॥३९॥**

रौ नरौ लघुगुरू रथोद्धता ॥२७॥ रनभा द्विगुर्वन्ता स्वागता पुनः ॥२८॥ भत्रिकं द्वौ गुरू दोधकच्छन्दः ॥२९॥ ननरलघुगुरुभिर्भद्रिका ॥३०॥ रो जरौ लघुर्गुरुश्च श्येनिकायाम् ॥३१॥ नजजलघवः सगुरवः सुमुखी ॥३२॥ नयुगसगणद्विगुरवश्चित्रा ॥३३॥ तो तो जगगा इति उपस्थिता सा ॥३४॥ जः स्न(स्तो)गौ उपस्थितमिदम् ॥३५॥ मो द्वौ तौ गौ शालिनी [सागरैः]॥ सागरेहिं ति चतुर्भिर्यतिः ॥३६॥ सागरैरिति वर्तते । मस्तथा भ्तौ गुरू द्वौ वातोर्मी ॥३७॥ तौ जगौ ग पुनरिन्द्रवज्रा ॥३८॥ जतजा गुरू द्वौ उपेन्द्रवज्रा ॥३९॥

**परुप्परं दुण्हमिमाण पायविमिस्सण चुद्दसहोवजाई ।**
**जाईण इत्तोवरपच्छिमाण सव्वाण बुद्धेहिं पुणोवइट्ठा ॥४०॥**

[परस्पर द्वयोरनयोः पादविमिश्रण चतुर्दशधोपजातिः ।
जातीनामितःपरपश्चिमाना सर्वासा वृद्धैः पुनरुपदिष्टा ॥४०॥]

अनयोरग्रतः पृष्ठतश्च प्रत्यक्षयोरिन्द्रवज्रोपेन्द्रवज्रयोरिन्द्रवंशावंशस्थयोश्चान्योन्यं पादविमिश्रणमहिसंकर उपजातिः । सा च प्रस्तारभेदाच्चतुर्दशधा । स्थापना चेयम्[1] । आद्यन्तौ मुक्त्वा चतुर्दश ज्ञेयाः । समवृत्तप्रस्तावेप्युपजातीनामुपन्यासो लाघवार्थ । वहुश्रुतेस्तु इतःपरासां जगत्यादीनां पश्चिमानामुक्तादीनां प्रायो गायत्र्यादीनां कृतनामाकृतनामविसदृशप्रस्ताररूपस्वस्वपादानां स्वल्पभेदानां सर्वासां जातीनां संकर उपजातिरुपदिष्टा । यथा—

1 The illustrations are dropped by the editor, as they are unimportant.

युधिष्ठिरो धर्ममयो महाद्रुमः स्कन्धोर्जुनो भीमसेनोस्य शाखा ।
माद्रीसुतौ पुष्पफले समृद्धे मूलं कृष्णो ब्रह्म च ब्राह्मणाश्च ॥ ४० ॥ तृ(त्रि)ष्टुप् ॥ ११ ॥

सा इंदवंसा उ तता जरा जहिं ॥ ४१ ॥ मुणेह वंसत्थमिणं जता जरा ॥ ४२ ॥
जत्थ रा हुंति चत्तारि सा सग्गिणी ॥ ४३ ॥ जहि वेयया तं भुयंगप्पयायं ॥ ४४ ॥
चउसं सुण तोडयमित्थ पुणो ॥ ४५ ॥ दुयविलंविय नाम नभा भरा ॥ ४६ ॥
पमियक्खरा सजससेहिं कया ॥ ४७ ॥ जभा जरा जहिमिमा पियंवया ॥ ४८ ॥
नयनयवद्धा कुसुमविचित्ता ॥ ४९ ॥ पमुइयवयणा नना रद्दुगं ॥ ५० ॥
इह हि नजेहि जरेहि मालई ॥ ५१ ॥ निसुणह तामरसं नजजा यो ॥ ५२ ॥
रवी लगा कमा वसंतचच्चरं ॥ ५३ ॥ दो मा या नेया पंचहिं वेसएवी ॥ ५४ ॥
जलुद्धयगई छहिं जसजसा ॥ ५५ ॥ इत्थं पुण तो यो तो यो मणिसाला ॥ ५६ ॥
नदुगमिह पुडो मो यो वसूहि ॥ ५७ ॥

यत्र ततौ जरौ सा इन्द्रवंशा पुनः ॥ ४१ ॥ जतौ जरौ वंशस्थमिदं जानीत ॥ ४२ ॥ यत्र राश्चत्वारः सा स्रग्विणी ॥ ४३ ॥ यत्र याश्चत्वारस्तद्भुजगप्रयानम् ॥ ४४ ॥ चतुःसं तोटकमिह पुनर्जानीहि ॥ ४५ ॥ नभौ भरौ द्रुतविलम्बित नाम ॥ ४६ ॥ सजससैः कृता प्रमिताक्षरा ॥ ४७ ॥ यत्र जभौ जरौ प्रियंवदेयम् ॥ ४८ ॥ नयनयग्रथिना कुसुमविचित्रा ॥ ४९ ॥ ननौ रद्विकं प्रमुदितवदना ॥ ५० ॥ नजाभ्या जराभ्यामिह हि मालती ॥ ५१ ॥ नजजा यश्चेत्तामरसम् ॥ ५२ ॥ द्वादश लगाः क्रमाद्वसन्तचत्वरम् ॥ ५३ ॥ द्वौ मौ यौ ज्ञेयौ पञ्चभिर्वैश्वदेवी ॥ पञ्चभिर्यतिः ॥ ५४ ॥ ज सो जसा(सौ) जलोद्धतगतिः । षड्भिर्यतिः ॥ ५५ ॥ षड्भिरिति वर्तते । इह पुनस्तोयस्तोयो मणिमाला ॥ ५६ ॥ इह नद्विकं मो यः पुटः । अष्टभिर्यतिः ॥ ५७ ॥ **जगती ॥ १२ ॥**

मो नो जो पहरिसिणी रगा सिहीहिं ॥ ५८ ॥ मो तो यो सो गो चउहिं मत्तमयूरं ॥ ५९ ॥
जभा सजा गुरु रुइरा भणिज्जए ॥ ६० ॥ नदुगतरगणा गो य चंदियाए ॥ ६१ ॥

मो नो जो रगौ प्रहर्षिणी [शिखिभिः] ॥ त्रिभिर्यतिः ॥ ५८ ॥ मस्तो यः सो गो मत्तमयूरं [चतुर्भिः] ॥ चतुर्भिर्यतिः ॥ ५९ ॥ चतुर्भिर्यतिरिति वर्तते । जभौ सजौ गुरुः रुचिरा भण्यते ॥ ६० ॥ नद्विकतरगणा गश्च चन्द्रिकायाम् ॥ ६१ ॥ **अतिजगती ॥ १३ ॥**

तो भो वसंततिलया जदुगं गुरू दो ॥ ६२ ॥ जलहिनपरगुरुदुगमुवचित्तं ॥ ६३ ॥
वाणेहिं मो तो नसदुगुरु असंवाहा ॥ ६४ ॥ इसिहि ननरसा लगा अवराइया ॥ ६५ ॥
पहरणकलिया ननभनलगुरू ॥ ६६ ॥

तो भो जद्विकं द्वौ गुरू वसन्ततिलका ॥ ६२ ॥ चतुर्नगणपरगुरुद्विकं उपचित्रम् ॥ ६३ ॥ [वाणैः] मस्तो नसद्विगुरुरसंबाधा ॥ पञ्चभिर्यतिः ॥ ६४ ॥ [ऋषिभिः] ननरसा लगौ अपराजिता । सप्तभिर्यतिः ॥ ६५ ॥ ऋषिभिरिति वर्तते । ननभनलगुरवः प्रहरणकलिका ॥ ६६ ॥ **शक्वरी ॥ १४ ॥**

